THE ORIGINAL SANSKRIT

# YÂJNAVALKYA SMṚITI

WITH THE FAMOUS COMMENTARY OF

## VIJNÂNEŚVARA

CALLED

# THE MITÂKṢARÂ

AND THE WELL-KNOWN TIKÂ OF

## VAIDYÂNATHA PAYAGUṆḌA

CALLED



## BÂLAMBHAṬṬI

PART I.—Pp. 1—200.

EDITED BY

B. GOVINDA DÂSA

Allahabad

PRINTED AND PUBLISHED BY PANCHKORY MITTRA AT THE INDIAN PRESS

1909

*Price Rupees Two only*

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

# याज्ञवल्क्यस्मृतिः ।

## मिताक्षराख्यव्याख्यया बालम्भट्टीकृतया च तट्टीकया समलंकृता ॥

(६)

### अथाचाराध्यायः ।

या० योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥

( उपोद्घातप्रकरणम् ॥ )

मि० धर्माधर्मौ तद्विपाकास्त्रयोऽपि क्लेशाः पश्च प्राणिनामायतन्ते ।
यस्मिन्नेतैर्नो परामृष्ट ईशो यस्तं वन्दे विष्णुमोङ्कारवाच्यम् ॥ १ ॥
याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम् ।
धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबोधविधये विविच्यते ॥ २ ॥

याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास, यथा मनुनोक्तं भृगुः । तस्य चायमाद्यः श्लोकः ।

'योगिनां' सनकादीनाम् 'ईश्वरः' श्रेष्ठस्तं याज्ञवल्क्यं 'संपूज्य' मनोवाक्कायकर्मभिः पूजयित्वा 'मुनयः' सामश्रवःप्रभृतयः श्रवणधारणयोग्या 'अब्रुवन्' उक्तवन्तः धर्मान् 'नः' अस्मभ्यं ब्रूहीति। कथम्? 'अशेषतः' कात्स्न्र्येन। केषां? 'वर्णाश्रमेतराणां' वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचारिप्रभृतयः, इतरे अनुलोमप्रतिलोमजाता मूर्द्धावसिक्तादयः । इतरशब्दस्य द्वन्द्वे चेति सर्वनामसंज्ञाप्रतिषेधः । अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः । तद्यथा, वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः साधारणधर्मश्चेति । तत्र वर्णधर्मा, "नित्यं मद्यं ब्राह्मणो वर्जयेत्" इत्यादिः । आश्रमधर्मः अग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मः "पालाशो दण्डो ब्राह्मणस्य" इत्येवमादिः । गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । निमित्तधर्मो विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणो धर्मः अहिंसादिः । "न हिंस्यात्सर्वा भूतानि" इत्याचाण्डालं साधारणो धर्मः । श्रुत्युक्त—"शौचाचारांश्च शिक्षयेत्" इत्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्य प्रयोजनादिकथनं नातीवोपयुज्यते । तत्र चायं क्रमः । प्रागुपनयनात्कामचारकामवादकामभक्षाः, ऊर्ध्वमुपनयनात्प्राग्वेदाध्ययनोपक्रमाद्धर्मशास्त्राध्ययनम्, ततो धर्मशास्त्रविहितयमनियमोपेतस्य वेदाध्ययनम्, ततस्तदर्थजिज्ञासा, ततस्तदनुष्ठानमिति ।

ध।

पद्य

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मि० तत्र यद्यपि धर्मार्थकाममोक्षाः शास्त्रेणानेन प्रतिपाद्यन्ते तथापि धर्मस्य प्राधान्याद्धर्मग्रहणम् । प्राधान्यं च धर्ममूलत्वादितरेषाम् । न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्म इति अविशेष इति । यतोऽर्थमन्तरेणापि जपतपस्तीर्थयात्रादिना धर्मनिष्पत्तिः, अर्थलेशोऽपि न धर्ममन्तरेणेति । एवं काममोक्षावपीति ॥ १ ॥

बा० श्रीलक्ष्मीरमणं नत्वा लक्ष्मीर्लक्ष्मीं शिशुप्रसूः ।
खेरडामुद्गलापत्यगणेशापत्यकृष्णकः ॥ १ ॥
महादेवः सुतस्तस्य वेदमूर्तिर्जटान्तवित् ।
श्रौतस्मार्तार्थनिपुणो दीक्षितो राजपूजितः ॥ २ ॥
पत्नी यस्य ह्युमारूपा साध्व्युमा तस्य कन्यका ।
पायगुण्डोपाख्यवैद्यनाथपत्नी पतिव्रता ।
मिताक्षराया विवृतिं तनुते सर्वसंविदे ॥ ३ ॥

तत्र तावच्छ्रुतिस्मृतिपुराणादिभिर्मोक्षस्यैव परमपुरुषार्थतां योगस्य च तदसाधारणकारणतां निश्चित्य योगविद्यायामभिनिविष्टयोगीश्वरप्रणीतं योगप्रधानं धर्मशास्त्रं व्याचिख्यासुर्धर्मादेर्भगवदायत्तत्वेन तदनुग्रहमन्तरेण तदुद्बोधाद्यसम्भवेन निर्णयासम्भवेन तदनुग्रहसूचनाय स्वस्य योगित्वसूचनाय च योगशास्त्रप्रतिपाद्यमेव भगवत्स्वरूपमुपवर्णयन्नभिधेयजिज्ञासायामभिधेयं च प्रदर्शयन् विज्ञानेश्वराचार्यः प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकदुरितोपशमनाय स्वेष्टदेवतानतिस्तुत्यन्यतररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति । धर्माधर्माविति । 'तं विष्णुं' व्यापकं ब्रह्म अहं 'वन्दे' स्तौमि वाक्कायमनोभिर्नौमि वा । तं कं,? 'यस्मिन् प्राणिनां', सामान्यनिर्देशोऽपि *तिर्यगधिकरणन्यायेन विशेषपरतया मनुष्याणां, तत्सम्बन्धिनः, 'धर्माधर्मौ' द्वौ, 'तद्विपाकास्त्रयो' धर्माधर्मयोर्विपाकाः परिणामविशेषाः फलानि जात्यायुर्भोगलक्षणास्त्रयः, 'पञ्च क्लेशा अपि' अविद्याऽस्मितारागद्वेषाभिनिवेशाः । तत्र अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । शरीराद्यतिरिक्त आत्मा नास्तीत्येवं प्रत्ययः अस्मिता । रागद्वेषौ प्रसिद्धौ । अभिनिवेशो मरणादित्रासः । एते च 'आयतन्ते' आयत्ताः सन्तो वर्त्तन्ते । जीवाधीनप्राणिधर्मादेरपि जीवायत्तत्वात् तद्व्यावृत्तये आह । य 'एतै' धर्मादिभि 'र्नो' न 'परामृष्टः' सम्बद्धः कदाऽपि एतैरसम्बद्धः । तदपरामर्शे हेतुमाह । 'य' ईशः ईश्वरो नियन्ता ऽप्रतिहतेच्छः । तत्सत्त्वे मानमुपदर्शयन् तत्स्वरूपमाह । ओङ्कारेति । प्रणवस्य वाच्यमित्यर्थः । तदुक्तं पतञ्जलिना, तस्य वाचकः प्रणव इति । यो० सू० पा० १ । २७ ।

योगियाज्ञवल्क्येनाप्युक्तम्,

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥ इति ॥

अदृष्टेति । अश्रुतेत्यपि बोध्यम् । भावो भक्तिः ।

* जै० ६ । १ । अ० २ ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० अथाभिधेयं प्रतिजानीते । याज्ञेति । मया 'धर्मशास्त्रं' धर्मसम्बन्धिबोधसाधनं तत्प्रतिपादकसंहितारूपम् 'ऋजुभिः' स्फुटार्थैः 'मिताक्षरैः' बहुव्रीहिः वाक्यमन्यपदार्थः । तैः 'विविच्यते' स्मृत्यन्तरैकवाक्यतया सति सम्भवे आकाङ्क्षापूरणविरोधपरिहाराभ्यां तदसम्भवे सर्वथा विरोधे विकल्पाभिधानेन च विशदीक्रियते । तत्रानतिप्रसङ्गायाह । याज्ञेति । स्वस्य योगित्वेन तस्य योगीश्वरत्वेन तस्यैवेष्टार्थत्वेन तत्रैव श्रद्धोदयादिति भावः । मननशीलेन याज्ञवल्क्याख्येन कथितं, मयूरव्यंसकादिः । मुनित्वेन भाषणयोग्यता सूचिता । तत्त्वस्याप्यतिप्रसक्तत्वादाह । मुहुरिति । वारंवारं, विश्वरूपाचार्यस्य 'विकटा' अतिगहनार्था या 'उक्तयो' व्याख्यानानि यस्मिन् तत्, अत एव ताभिः 'विस्तृतं' बहुलीकृतं, तथा च तद्व्याख्यातमेव व्याख्यायते इति सूचितम् । एवञ्च योगियाज्ञवल्क्यस्मृत्यव्याख्यानेऽपि न प्रतिज्ञाहानिरिति बोध्यम् । नन्वेवं तद्व्याख्यानस्वव्याख्यानयोर्वैलक्षण्यलाभेऽपि बुधानां तत एवेष्टसिद्ध्या किमेतत्प्रयासेनात आह । बालेति । तद्ग्रहणाद्यपटूनामष्टवर्षादीनामचिरोपनीतानामनुष्ठानार्थमनुष्ठेयार्थज्ञानप्रवृत्तानां 'बोधो' बुद्धिरसन्दिग्धाविपर्यस्तानुष्ठेयार्थधीस्तस्या 'विधिः' सिद्धिस्तन्निष्पत्तये इत्यर्थः । तथा च तेषां न ततः सेत्येतत्प्रवृत्तिः सफला । ऋजुत्वमितत्वाभ्यां वैकल्यविस्तरयोर्निरासेनेतस्तेषां तद्बोधस्य सुकरत्वादिति भावः । ननु तदुक्तं तद्विविच्यते इति प्रतिज्ञा न युक्ता "याज्ञवल्क्यं सम्पूज्य" इति ग्रन्थादौ "एवमस्त्विति होवाच" इति ग्रन्थान्ते च निर्देशस्यात्मन्यनुचितत्वादत आह । याज्ञेति । विशेषाप्रसिद्धेराह । कश्चिदिति । प्रश्नोत्तराभ्यां 'रूप्यते' रूपीक्रियते तत्, प्रश्नोत्तरे 'रूपं' स्वरूपं यस्य तद्वा । प्रश्नो मुनीनामुत्तरं याज्ञवल्क्यस्य । कथेति । बहु तत्प्रणीतं धर्मशास्त्रं संक्षिप्योत्तररूपं कथयामासेत्यर्थः ।

स्वकृतपद्यसमूहरूपसंहितारूपेण स्वशिष्यान् प्रतीति शेषः । तथा च याज्ञवल्क्यस्यार्थप्रवक्तृत्वेऽपि संहिताप्रणेतृत्वाभावेन तत्कृततन्निर्देशस्य नासङ्गतिरिति भावः । उक्तार्थस्यादृष्टचरत्वनिरासाय दृष्टान्तमाह । यथेति । तत्र मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायामित्येवं तदुल्लेखदर्शनात्तस्य दृष्टान्तत्वम् ।

अतएव,

इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः ।
विधिवद् ग्राहयामास मरीच्यादीनहं मुनीन् ॥ म० अ० १ श्लो० ५८
स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत् । म० अ० १ श्लो० १०२
*स्वयम्भुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे ।
मनुप्रणीतान् विविधान्धर्मान् वक्ष्यामि शाश्वतान् । म० अ० १ श्लो० १

इति तत्रोक्तम् । तदेतद् ध्वनयन्नत्रापि तथैवेत्याह । तस्य चेति । शिष्यप्रणीतस्यास्यापीत्यर्थः । तेन दृष्टान्तसंग्रहः । 'आदौ' ग्रन्थप्रारम्भे भव आद्यः मुनिप्रश्नबोधकः । तेनासङ्गताभिधायित्वं मुनेर्निरस्तं, प्रश्नस्यैवाभिधानसङ्गतित्वात् । एवञ्चोत्तरग्रन्थप्रवृत्तिनिमित्तबोधकमिदं पद्यमिति भावः । कर्मधारयनिरासायाह । योगीति ।

* अयं श्लोको बहुषु मनुपुस्तकेषु नोपलभ्यते, केवलं Jolly संशोधितपुस्तके मिलति ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० मिथिलास्थं महात्मानं सर्वयोगीश्वरेश्वरम् ।
भगवन् सर्वयोगीश ब्रूहि नः संशयो महान् ॥

इत्यादौ तथैव कृतत्वात् । स्वाम्यर्थत्वनिरासायाह । श्रेष्ठमिति । *स्वामीश्वरेति षष्ठी । †समर्थमाह । मन इति । मुनित्वस्य विवक्षितत्वे कृतकृत्यत्वेन प्रश्नासम्भवात् तदविवक्षया व्युत्क्रमेणादौ विशेष्यमाह । सामेति । "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" इत्यस्यामाख्यायिकायां "सामश्रवस्त्वम् एता गा उपाहर" इति याज्ञवल्क्योक्त्या तस्य प्रियशिष्यताऽवगमेन तस्यैव प्रश्नधार्ष्ट्यसम्भव इति भावः । तस्य वैयर्थ्यं निराकुर्वन् तदर्थमाह । श्रवणेति । अशेषत इत्यस्य द्वितीयाबहुवचनान्तप्रकृतिकतसन्तत्वेन धर्मविशेषणत्वे श्रौतादिधर्मानुक्त्योत्तरे न्यूनतेत्याशयेनाह । कर्थमिति । कार्त्स्न्येनेति । तथा च तृतीयान्तात्तसिः, न तथा । एवञ्च क्रियाविशेषणत्वेनाभिधानस्यैव कार्त्स्न्यं न तेषामिति नोक्तदोषः । तथा चाध्याहारानुषङ्गविपरिणामादिराहित्येन देशकालाद्यङ्गसाहित्येन चेत्यर्थः पर्यवस्यति । प्रत्यधिकारि धर्मभेदेन तदनिश्चयात्, तदनिश्चये कथं सामान्यप्रश्नादीत्याशयेनाह । केषामिति । अत्रत्याश्रमशब्दो ऽर्श आद्यजन्ततया धर्मिपरो, ऽन्यथा ऽसम्भवः । अतएव वर्णादिसाहचर्यमित्याह । ब्रह्मेति । कुण्डगोलकादीनां तदनुक्त्योत्तरे न्यूनतापत्तेराह । अनुलोमेति । उत्तरानुरोधेनेतरशब्दस्य तत्परत्वकल्पनात् । अन्यथा तयोर्वाक्यभेदापत्तिः स्पष्टैव । ननु सर्वादीनीति सर्वनामत्वेन सुडापत्तिरत आह । इतरेति । द्वन्द्वे चेत्यनेनेति भावः ।

नन्वीदृशधर्मप्रश्नेऽप्यविशेषप्रश्नस्यैव लाभेन न्यूनतोत्तरे तदवस्थैव, किञ्च बहुत्वस्य ‡कपिञ्जलाधिकरणन्यायेन वर्णेति सम्बन्धिनिर्देशेन च त्रित्वे पर्याप्त्या धर्मत्रयप्रश्नस्यैव लाभेन तत्र न्यूनतोत्तरे आधिक्यञ्चात आह । अत्र चेति । प्रश्ने इत्यर्थः । तथा च तत्सम्बन्धिनः षड्विधस्य तादृशस्य धर्मस्य प्रश्नो न तु तत्तत्प्रयुक्तस्य, येन तथा स्यात् । उत्तरानुरोधेन तस्य तत्परत्वलाभादिति भावः । स्मार्त इत्यनेन श्रौतव्यावृत्तिः । षड्विध इत्यनेनाधिकव्यावृत्तिः । तदेवाह । तद्यथेत्यादिना । अग्नीन्धनं होमः, करणे ल्युट् । साधारणेति । "न हिंस्यात् सर्वाभूतानी"त्यस्याचण्डालं प्रवृत्तेः । ननु अनुबन्धचतुष्टयस्यावश्यं वाच्यत्वमादौ, प्रयोजनादिज्ञानाधीनत्वात् प्रवृत्तेः । न हि प्रयोजनमिति न्यायात् । अत आह । शौचेति । मूलोक्तिरेवेयमग्रे । उपनीयेत्यत्र विधिनोपनयनाख्यसंस्कारेणात्मसमीपप्रापणं नयत्यर्थः । तेन स आचार्यः कृतो भवतीत्याचार्यकरणनिमित्तकोक्तविध्याक्षिप्तत्वादित्यर्थः । तद्विना तदनुपपत्तेरिति भावः । कथिते स्फुटप्रतिपत्तेर्मन्दाधिकारिणामत आह । नातीत्रोपेति । ननु तत्र वाक्ये उपनयनाध्यापनतच्छिक्षाणां क्रमोक्त्या तदनन्तरं सा व्यर्था ऽत आह । तत्र चेति । उपनयनादिविषये इत्यर्थः । 'अयं' वक्ष्यमाणः । तत्रादौ "उपनीय शिक्षयेत्" इत्यनेन सूचितमाह । प्रागिति । क्रममाह । ऊर्ध्वमिति । यमनियमाश्च प्रत्येकं

---

* व्या० अ० २ । पा० ३ । सू० ३९ । † संपूज्येत्येतद्घटकसम्शब्दार्थमित्यर्थः ।
‡ जै० अ० ११ । पा० १ । अ० ८ ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० दशाग्रे वक्ष्यमाणाः। *शेषे विभाषा इति नियमाप्रवृत्तिपक्षे शब्दानुशासनमितिवत् यमनियमोपेतस्य वेदाध्ययनमिति प्रयोगः। 'ततः' तदर्थज्ञानानन्तरम्।

तथा च मनुः। अ० २ श्लो० ६९

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च सन्ध्योपासनमेव च॥
अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।

इत्यादि। ननु पुरुषार्थचतुष्टयस्यात्रोक्तत्वेन सर्वशास्त्रत्वे कथं तत्त्वमात्रमत आह। तत्रेति। उक्तक्रमे सतीत्यर्थः।

ननूद्देश्यत्वलक्षणमार्थं प्राधान्यं मोक्षस्यैवेति तथा वाच्यमत आह। प्राधान्यमिति। चस्त्वर्थे॥ १॥

या० मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन्।
यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत॥ २॥

मि० एवं पृष्टः, मिथिला नाम नगरी तत्र स्थितः, 'स' याज्ञवल्क्यो योगीश्वरः 'क्षणं ध्यात्वा' कञ्चित्कालं मनः समाधाय एते श्रवणाधिकारिणो विनयेन पृच्छन्तीति युक्तमेतेभ्यो वक्तुमित्युक्तवान् मुनीन्। किं? 'यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति'। कृष्णसारो मृगो यस्मिन्देशे स्वच्छन्दं विहरति तस्मिन्देशे वक्ष्यमाणलक्षणा धर्मा अनुष्ठेया नान्यत्रेत्यभिप्रायः॥ २॥

बा० एवं पृष्ट इति। अनेन सङ्गतिर्नापृष्ट इतिनिषेधपरिपालनं चेत्युभयं सूचितम्। क्षणपदं न प्रसिद्धविशेषपरमित्याह। कञ्चिदिति। ध्यानञ्च न धर्मस्मरणार्थं, तत्र तेषां स्फुरद्रूपाणां सत्त्वात्। किन्तु तेषां श्रवणाधिकारित्वनिर्णयार्थमित्याह। एते इति। कर्मणोऽनुक्तत्वादादावशेषत इत्युक्ताङ्गभूतदेशानाह। किमिति। यस्मिन्निति उत्तरार्धस्य कर्मत्वेनान्वयः। वाक्यार्थस्य कर्मत्वान्न द्वितीया। स्मृत्यन्तरानुरोधेन कृष्णपदं न गुणपरं किन्तु नामैकदेशो इति न्यायेन मृगजातिविशेषपरं, मृगपदं च तत्रैव तात्पर्यग्राहकमित्याह। कृष्णेति। कृष्णेन वर्णेन सारः श्रेष्ठः कृष्णस्सारो यस्मिन्निति वा। दैवात् बलात्कारेण वा ऽऽगतव्यावृत्तये आह। स्वच्छन्दमिति। सत्तामात्रनिवृत्तये आह। विहरतीति।

तथा च मनुः, (अ० २ श्लो० २३)

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः॥ इति॥

अनेन धर्मसामान्यं न कथ्यते विशेषानालिङ्गितसामान्याभावात्, नापि तेषां तत्र सत्ता कथ्यते प्रश्नविरुद्धत्वात्, अनुष्ठानं विना स्वरूपतस्तेषां सत्ताया बाधितत्वाच्च, अत आह। वक्ष्यमाणेति। तथा च धर्मपदं विशेषपरमेव। अनुष्ठेयानिति शेषः। तथा च तत्र धर्माननुष्ठेयान्निबोधतेत्यर्थः

* पा० २। पा० ३। ६६ सूत्रस्थं वार्त्तिकम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० सूचितः। अतएवोक्तमनुसङ्गतिः। तथा चाशेषत इति प्रश्ने उक्त्या सर्वोपयोगित्वेन साधारणतया च तदनुष्ठानाधारकथनमादाविति भावः ॥ २ ॥

मि० शौचाचारांश्च शिक्षयेदित्याचार्यस्य धर्मशास्त्राध्यापनविधिः, शिष्येण तदध्ययनं कर्तव्यमिति कुतोऽवगम्यतइत्यत आह।

या० पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३ ॥

मि० 'पुराणं' ब्राह्मादि। 'न्यायः' तर्कविद्या। 'मीमांसा' वेदवाक्यविचारः। 'धर्मशास्त्रं' मानवादि। 'अङ्गानि' व्याकरणादीनि षट्। एतैरुपेताश्चत्वारो वेदाः। 'विद्याः' पुरुषार्थसाधनज्ञानानि। तासां स्थानानि च चतुर्दश, धर्मस्य च चतुर्दश 'स्थानानि' हेतवः। एतानि च त्रैवर्णिकैरध्येतव्यानि तदन्तर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्यम्। तत्रैतानि ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि, क्षत्रियवैश्याभ्यां धर्मानुष्ठानाय। तथा च शंखेन विद्यास्थानान्यनुक्रम्योक्तम्। एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषामिति।

मनुरपि द्विजातीनां धर्मशास्त्राध्ययनेऽधिकारो ब्राह्मणस्य प्रवचने नान्यस्येति दर्शयति।

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥
विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः।
शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित् ॥ इति ॥ ३ ॥

बा० उक्तहेतोरेव तेषामपि तज्जिज्ञासानिवृत्तये अन्यथा वैयर्थ्यापत्त्या वक्ष्यमाणश्लोकं स्मृत्यन्तरानुरोधेन शिष्याध्ययनपरतया योजयति। शौचेति।

बृहस्पतिरपि,

वेदमध्यापयेत् पश्चाच्छास्त्रं मन्वादिकं तथा। इति।

पुराणं ब्राह्मादीति। तल्लक्षणादि च मात्स्ये,

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ अ० ५३ श्लो० ६४

प्रतिसर्गः संहारः।

अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते।
पाद्मं ब्राह्मं वैष्णवञ्च शैवं भागवतं तथा* ॥
तथाऽन्यन्नारदीयञ्च मार्कण्डेयं च सप्तमम्।
आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम्* ॥

* एतच्चिह्नाङ्किताः श्लोकाः मुद्रितमत्स्यपुराणपुस्तके नोपलभ्यन्ते।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं तथा ।
वाराहं द्वादशञ्चैव स्कान्दञ्चात्र त्रयोदशम्* ॥
चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम्* ॥
पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् ।
तदष्टादशसाहस्रं नारसिंहमिहोच्यते ॥ ( अ० ५३ । श्लो० ५९ )
नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते ।
नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्तितम् ॥ ( अ० ५३ । श्लो० ६० )
यत्तु साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ।
प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रताः ॥ ( अ० ५३ । श्लो० ६१ )
एवमादित्यसंज्ञञ्च तत्रैव परिगद्यते । ( अ० ५३ । श्लो० ६२ )
अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते ।
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ ( अ० ५३ । श्लो० ६३ )

विनिर्गतं समुद्धृतम् ।

ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥ ( अ० ५३ । श्लो० १२ )
एतदेव यदा पाद्मं स्रष्टुं हैरण्मयं जगत् ।
तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः ।
पाद्मं तत्पञ्चपञ्चाशत् सहस्राणीति पठ्यते ॥ ( अ० ६३ । श्लो० १४ )
वराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
यत्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः ॥ ( अ० ५३ । श्लो० १६ )
त्रयोविंशतिसाहस्रं तत्पुराणं विदुर्बुधाः ॥ ( अ० ५३ । श्लो० १७ )
श्वेतकल्पप्रसङ्गेन रुद्रमाहात्म्यसंयुतान् ।
यत्राब्रवीत् स धर्मात्मा वायुर्धर्मानशेषतः ।
चतुर्विंशतिसाहस्रं वायवीयं तदुच्यते ॥ ( अ० ५३ । श्लो० १८ )
यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद् भागवतमुच्यते ॥ ( अ० ५३ । श्लो० २० )
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराधमाः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥ ( अ० ५३ । श्लो० २१ )
तदष्टादशसाहस्रं पुराणं परिकीर्त्तितम् ॥ ( अ० ५३ । श्लो० २२ )
यत्राह नारदो धर्मान् बृहत्कल्पाश्रितान्पुनः ।
पञ्चत्रिंशत्सहस्राणि नारदीयं तदुच्यते ॥ ( अ० ५३ । श्लो० २३ )

* एतच्चिह्नाङ्किताः श्लोकाः मुद्रितमत्स्यपुराणपुस्तके नोपलभ्यन्ते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणम् ।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥ ( अ० ५३ । श्लो० २६ )
यत्र चेशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ॥ ( अ० ५३ । श्लो० २८ )
एतत् षोडशसाहस्रं सर्वक्रतुफलप्रदम् । ( अ० ५३ । श्लो० २९ )
यत्राधिकृत्यमाहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्पतिः ।
मनवे कथयामास भूतग्रामस्य लक्षणम् ॥ ( अ० ५३ । श्लो० ३० )
चतुर्दश सहस्राणि तथा पञ्च शतानि च ।
भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥ ( अ० ५३ । श्लो० ३१ )
पर्वाणि चात्र पञ्चैव कीर्त्तितानि स्वयम्भुवा ।
प्रथमं कथ्यते ब्राह्मं द्वितीयं वैष्णवं स्मृतम्* ॥
तृतीयं वज्रमाख्यातं चतुर्थं त्वाष्ट्रमेव च ।
पञ्चमं प्रातिभाष्यञ्च सर्वलोकेषु पूजितम्* ॥
रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
यत्र ब्रह्मा वराहस्य चरितानि जगाद ह ॥ (अ० ५३ । श्लो० ३३)
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते । (अ० ५३ । श्लो० ३४)
यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥ (अ० ५३ । श्लो० ३६)
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ॥ (अ० ५३ । श्लो० ३७ )
महावराहमाहात्म्यमधिकृत्य च विष्णुना ।
क्षोण्यै प्रोक्तं मानवस्य कल्पस्यापि प्रसङ्गतः ।
चतुर्विंशतिसाहस्रं तद्वाराहमिहोच्यते ॥ ( अ० ५३ । श्लो० ३८ )
यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः ।
कल्पे किंपुरुषे वृत्तं चरितैरुपबृंहितम् ॥ (अ० ५३ । श्लो० ४१)
स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ।
सहस्राणि शतञ्चैकमिति मर्त्येषु गीयते ॥ (अ० ५३ । श्लो० ४२)
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधात् कृत्स्नं वामनं तत्प्रकीर्त्तितम् ॥ (अ० ५३ । श्लो० ४४)
पुराणं दशसाहस्रं कूर्मकल्पानुषङ्गि वै । (अ० ५३ । श्लो० ४५)
इन्द्रद्युम्नप्रसङ्गेन कूर्मरूपी जनार्दनः ।
ऋषीणामाह माहात्म्यं तच्च कौर्मं विदुर्बुधाः ॥ (अ० ५३ । श्लो० ४७)

---

* एतच्चिह्नाङ्कितौ श्लोकौ च नोपलभ्येते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

वा० सप्तदशसहस्रञ्च लक्ष्मीकल्पानुषङ्गिकम्॥ (अ० ५३। श्लो० ४७)
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः।
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम्॥ (अ० ५३। श्लो० ४९)
अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनिव्रताः।
तन्मात्स्यमनुजानीध्वं सहस्राणि चतुर्दश॥ (अ० ५३। श्लो० ५०)
यदा च गारुडे कल्पे विश्वाण्डात् गरुडोद्भवम्।
अधिकृत्याब्रवीत् कृष्णो गारुडं तदिहोच्यते।
तदष्टादश चैकं च सहस्राणीह पठ्यते॥ (अ० ५३। श्लो० ५२)
यत्र ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत् पुनः।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम्।
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः॥ इति (अ० ५३। श्लो० ५४)
ब्रह्माम्भोरुहविष्णुवायुभगवत्संज्ञं ततो नारदं
मार्कण्डेयमथाग्निदैवतमिति प्रोक्तं भविष्योत्तरम्।
तस्माद् ब्रह्मविवर्त्तसंज्ञमपरं स्कान्दं वराहं तथा
लैङ्गं वामनमत्स्यकूर्मगरुडब्रह्माण्डमष्टादश॥

ब्राह्ममेवादिपुराणमित्यपि तत्रैव व्यक्तम्। वायवीयमेव शैवमिति कालिकापुराणे,

शैवं यद्वायुना प्रोक्तं वैरञ्चं सौरमेव च। इत्यादिना व्यक्तं।

वायुपुराणादभिव्यक्तं शैवमुपपुराणमित्यर्थ इत्यन्ये। अग्निपुराणं वन्हिपुराणत्वेन गणितं पुराणगणनायाम्,

कालिकापुराणे एव,

यदिदं कालिकाख्यं तन्मूलभागवतं स्मृतम्। इत्युक्तम्।

इदमुपपुराणमित्यग्रे वक्ष्यते। केचित्त्विदमेव पुराणं, न प्रसिद्धम्। प्रसिद्धभागवते सारस्वतकल्पाद्यदर्शनात्।

मात्स्ये, (अ० ५३। श्लो० ६९)

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः।
भारताख्यानमखिलं चक्रे तदुपबृंहितम्॥ इत्युक्तेः।

प्रसिद्धभागवते भारतोत्तरं निर्विण्णो व्यासश्चकारेत्युक्तेर्विरोधदर्शनात्। भारते शान्तिपर्वणि भीष्मेण युधिष्ठिरं प्रति धर्मोपदेशप्रस्तावे मुक्तिरुक्तेति कुत एव परीक्षित्पर्यन्तं शुकानुवृत्तिरिति विरोधाच्च।

विष्णुपुराणे च बौद्धावतारोक्तौ "*मायामोहं ददौ हरिः" इत्युक्तम्। प्रथमस्कन्धे तु

* अं० ३ अ० १७ श्लो० ४१ इत्युक्तो भगवान् तेभ्यो मायामोहं शरीरतः। समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान्॥ इति मुद्रित पु० पा०।



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० इक्ष्वाकुवंश्यस्य जिनस्यैव बौद्धत्वमिति विरोधाच्च। इत्यादिभिर्हेतुभिरेव श्रीधरेणापि सन्दिग्धमित्याहुः। वस्तुतस्तु तत्र सारस्वतकल्पाद्यदर्शनेऽपि तन्मध्यस्थनराधमवृत्तान्तोद्भवत्वमत्राक्षतं, यत्राधिकृत्येत्युक्तलक्षणान्तरवत्। भारतोत्तरमेतन्निर्माणेऽपि—

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः।
भारताख्यानमखिलं चक्रे तदुपबृंहितम्॥

इति मात्स्यविरोधो न। सप्तदशानां बाह्यत्वेनापि तस्य च वौद्धत्वेन करणात्। वैष्णवस्य बाह्यत्वेन कृतत्वेन स्मृत्युक्तधर्मांशे तथा कथनापेक्षाया अभावात्। अतएव निर्विण्ण इति तत्र विशेषणं सङ्गतम्। शान्तिपर्वणि मुक्तिकथनमपि शुकस्य वैकुण्ठगमनपरमिति परीक्षित्पर्यन्तं शुकानुवृत्तिसत्त्वात्तद्विरोधोऽपि न। वौद्धावतारविषये विष्णुपुराणविरोधोऽपि न। अजिनसुत इति पाठवज्जिनसुत इति पाठे नामतौल्येऽपि व्यक्तिभेदेन इक्ष्वाकुवंश्यस्य जिनस्यावौद्धत्वात्। श्रीधरसन्देहाशयस्यान्यस्यान्यत्र प्रतिपादितत्वेन तदपि नात्र साधकम्। युक्तं चैतत्। अन्यथा कालिकापुराणभागवतयोरुपपुराणत्वप्रतिपादकवक्ष्यमाणकौर्मविरोधो दुर्निवार एवेति बोध्यम्। सौरपुराणञ्च ब्रह्मपुराणादभिनिर्गतमुपपुराणम्।

तदुक्तं सौरपुराणे,

इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम्।
संहताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम्॥ (अ० ९। श्लो० १३)
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता। इति।

मात्स्ये,

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥ (अ० ५३। श्लो० ६७)
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च।
सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते॥ इति। (अ० ५३। श्लो० ६८)

विष्णुपुराणमपि द्विविधं पुराणमुपपुराणञ्च। भारतमुक्त्वा

मत्स्यपुराणे,

लक्षेणैकेन तत्प्रोक्तं वेदार्थपरिबृंहितम्।
वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमेव च। (अ० ५३। श्लो० ७०)
एवं सपादाः पञ्चैते लक्षास्तेषु प्रकीर्त्तिताः॥ इति। (अ० ५३। श्लो० ७१)

अथ हेमाद्रौ उपपुराणान्युपस्मृतिमध्यगणितानि लिख्यन्ते। तत्र कौर्मे, (अ० १)

अन्यान्युपपुराणानि मुनिभिः कथितानि तु। (श्लो० १६)
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्॥ (श्लो० १७)
कापिलं *मानवं चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च॥ (श्लो० १९)

* वामनमिति पञ्चाननतर्करत्नसंपादितपुराणपुस्तके पाठः।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ।
पराशरोक्तं प्रवरं तथा *भागवताह्वयम् ॥ इति । (श्लो० २०)
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
नादाख्यं शिवधर्माख्यं दौर्वासं नारदीयकम् ॥
कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं कालीपुराणाख्यं तथैव च ॥
वासिष्ठं लैङ्गसंज्ञं च साम्बं सौरं तथैव च ।
पाराशरसमाख्यं च मारीचं भार्गवाह्वयम् ॥
पाराशरसमाख्यं तु पुराणमिदमुत्तमम् ।

इति पाराशरोपपुराणे प्रथमाध्यायेऽपि ।

अत्रेदं तत्त्वम् । तत्र व्यासः,

अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्थितः ॥
एतेभ्योऽपि यदन्यत् स्यात् किञ्चिद्धर्माभिधायकम् ।
तद् दूरतो बुधैस्त्याज्यं मोहस्तस्याश्रयो मतः ॥
वेदार्थवित्तमैः कार्यमृषिभिर्यत् स्मृतं पुरा ।
तद्यत्नेनानुतिष्ठेत्तु तन्निषिद्धं तु वर्जयेत् ॥

तथा,

वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम् ॥

तथा,

कामधेनौ प्रदीपेऽब्धौ कल्पवृक्षलतादिषु ।
शम्भुद्रविड़केदारलोल्लटाद्यैश्च भाषितम् ॥

तत्समूलमन्यन्निर्मूलमिति स्मृत्यर्थसारे । तर्केति । अनेनोभयोः संग्रहः । वेदेति । अनेनापि तथा । एतैरिति । अङ्गान्तद्वन्द्वेन तत्पुरुष इति भावः । पुरुषार्थज्ञानेति । तत्साधनज्ञानेत्यर्थः । क्वचित्तथैव पाठः । उभयत्र स्थानपदार्थमाह । हेतव इति । एतदाकाङ्क्षानिवृत्तये तत एव पूरणेनाह । एतानि चेति । त्रैवर्णिकैरिति । एतत्तत्त्वमग्रे जातिभेदनिरूपणप्रकरणे स्फुटीभविष्यति । तत्र तथैव प्रसङ्गाद्विशेषमप्याह । तत्र तानीति । त्रैवर्णिकानां मध्ये, चतुर्दश स्थानानीत्यर्थः । 'अधिकुरुते' विद्याप्राप्तयेऽधिगच्छति । चस्त्वर्थे इतरेषामित्यग्रे योज्यः । 'वृत्तिं' ज्ञानम् । मन्त्रैः, युक्त इति शेषः । समन्त्रक इति यावत् । 'यस्य' त्रैवर्णिकस्य । नान्यस्येत्यनुवादः, तेषां नियतत्वात् । यद्वा तेषामयं विहितत्वादावश्यकः शूद्राणां त्वशिष्टाप्रतिषिद्ध इति तच्छङ्कानिवृत्त्यर्थमिदम् । एवमध्ययनस्य त्रैवर्णिकसाधारण्यमुक्त्वा प्रवचनस्य ब्राह्मणमात्राधिकारिकत्वमाह ।

* भार्गवाह्वयमिति उपर्युल्लिखितपुस्तके पाठः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

**बा०** विदुषेति। अत्राध्ययनेन श्रवणमपि लक्ष्यते। अतएव तत्र विद्वत्तोपयोगः। अध्ययनविधौ तु सा ऽदृष्टायैव स्यात्। अतएव 'प्रयत्नतः' 'सम्यग्' इति च। व्याकरणादिसंस्कारपूर्वमिति तदर्थः। अत एव नान्येन केनेति न निषेधविधिः किन्त्वनुवादः शास्त्रस्तावको वा। क्षत्त्रादितो ब्राह्मणस्यैवेतरशास्त्रतोऽस्य श्रेष्ठत्वात्। यद्वा अध्ययनस्य नित्यत्वादिज्ञानादिना विद्वत्ता, सा तूपयोगिनी तत्रापि भवत्येवेति भावः। चो भिन्नक्रमः। प्रवक्तव्यं चेत्यर्थः। प्रशब्देन नियमादिनेति सूचितम्। अत्र पुनरध्ययनविधिरधीत्यैव वक्तव्यं नान्यथा कथञ्चिदपीति सूचनार्थं इति बोध्यम्। अध्यापकब्राह्मणालाभे तु मनूक्तम् अब्राह्मणादध्ययनमित्यादिना स्फुटीभविष्यति। तेनाध्यापनमप्यर्थादनुज्ञातमिति तद्व्याख्यातारः ॥ ३ ॥

**मि०** अस्तु धर्मशास्त्रमध्येतव्यं याज्ञवल्क्यप्रणीतस्यास्य शास्त्रस्य किमायातमित्यत आह—

**या०** मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ ४ ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः[1] ॥ ५ ॥

**मि०** उशनःशब्दपर्यन्तो द्वन्द्वैकवद्भावः। याज्ञवल्क्यप्रणीतमिदं धर्मशास्त्रमध्येतव्यमित्यभिप्रायः। नेयं परिसंख्या किंतु प्रदर्शनार्थमेतत्। अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम्। एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणामाकाङ्क्षापरिपूरणमन्यतः क्रियते। विरोधे तु विकल्पः ॥ ४ ॥ ५ ॥

**बा०** तव्यमितीति। तथापीति शेषः। इत्यत्रेति पाठे इत्याशङ्कायामित्यर्थः।

अङ्गिरःशब्दान्तद्वन्द्वे समाहारे नपुंसकस्येतरेतरे तु बहुवचनस्यौचित्यमत आह। उशनसेति। नन्वेतासामेव स्मृतित्वे "षट्त्रिंशत्स्मृतयः स्मृता" इति विरोधोऽत आह। नेयमिति। तर्हि किमिति गणनमत आह। किन्त्विति। तत्फलमाह। अत इति। बौधायनादेरिति। तत्प्रोक्तादेरपीत्यर्थः। यद्वा धर्मशास्त्रत्वमित्यस्य तत्प्रयोजकत्वमित्यर्थः। तथा च

देवलः,

मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथा ऽङ्गिराः।
उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः ॥
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः।
संवर्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥ इति।

अत्र नारदोऽधिकः शातातपश्च मूले। शङ्खश्च, अत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्राचेतसादयः। आदिना

---

[1] प्रवर्तका इति पाठान्तरम्।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० बुधदेवलसुमन्तुजमदग्निविश्वामित्रप्रजापतिपैठीनसिपितामहबौधायनच्छागलेयजाबालच्यवनमरीचिकश्यपाः ।

भविष्ये,

अष्टादशपुराणेषु यानि वाक्यानि पुत्रक ।
तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥
मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्त्तिताः ।
वाक्यानि तासां क्रमशः समालोच्य ब्रवीमि ते ॥

इति गुहं प्रति ईश्वरः । यानि च वृद्धशातातपयोगियाज्ञवल्क्यवृद्धवसिष्ठवृद्धमनुलघुहारीतादीनि तानि प्रसिद्धषट्त्रिंशदन्तर्गतकर्तृकाण्येव । तथा च याज्ञवल्क्येनोक्तम् । ( अ० ३ श्लो० ११० ) योगशास्त्रञ्च मत्प्रोक्तमिति । रत्नाकरस्तु गोभिलऋष्यशृङ्गादीनां षट्त्रिंशदधिकानामपि भविष्ये एव दर्शितत्वान्नायं नियमः किन्तु शिष्टपरिग्रह एवेत्याह । यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत् । तथा स्मृत्यन्तरेषु चेति भविष्योक्तेः,

मैत्रायणीयच्छन्दोगकठापस्तम्बबह्वृचाम् ।
परिशिष्टानि यान्यत्र ये चान्ये खिलसंज्ञकाः ॥

इति भविष्योक्तेश्च । यानि च विष्णुधर्मशिवधर्ममहाभारतरामायणादीनि तान्यपि स्मृत्यन्तरत्वेनैवोपात्तानि ।

भविष्ये,

अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ ( अ० ४ श्लो० ८७ )
कार्ष्णञ्च पञ्चमं वेदं यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥ ( अ० ४ श्लो० ८८ )
तथेति नाम येषां च प्रवदन्ति मनीषिणः । इति । ( अ० ४ श्लो० ८९ )

तत्र तथेत्यस्य तद्वदविगीतमहाजनपरिगृहीतत्वेन प्रमाणं यत्तदपि तथा स्मृतित्वेन प्रमाणमित्यर्थः । यत्तु षट्त्रिंशन्मतचतुर्विंशतिमतादि तत्कैश्चिदेव परिगृहीतत्वाद्विगानाच्च न प्रमाणम् । स्मृतीनां धर्मशास्त्रत्वं तु,

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ( म० अ० २ श्लो० १० )

इति मनूक्तम् ।

आङ्गिरसे,

जाबालिर्नाचिकेतश्च छन्दोलौगाक्षिकश्यपौ ।
व्यासः सनत्कुमारश्च शतद्रुर्जनकस्तथा ॥
व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।
बौधायनः कणादश्च विश्वामित्रस्तथैव च ॥
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० वत्सपारस्करपुलस्त्यपुलहक्रतुऋष्यशृङ्गा आत्रेयबभ्रुव्याघ्रसत्यव्रतभरद्वाजगार्ग्यकार्ष्णाजिनिलौगाक्षिब्रह्मसम्भवाश्च हेमाद्रौ दानखण्डे अधिका गणिताः। कल्पतरौ च स्मृतिगणनायां प्रजापतियमबुधदेवला ये अधिका गणितास्तेऽपि हेमाद्रिणा प्रमाणप्रसङ्गादुदाह्रियन्ते।

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं तुरीयं तु विद्यास्त्वष्टादश स्मृताः॥ (अं० ३ अ० ६ श्लो० २६)

इति विष्णुपुराणाद्युक्ताश्चतस्रो दृष्टप्रधाना विद्याः क्वचिल्लौकिकमर्थं प्रमाणयन्त्यो धर्मेऽपि प्रमाणमिति कल्पतरुः।

तथाच शैवपुराणे वायवीयसंहितायांप्रथमेऽध्याये उक्तम्,

रोमहर्षण सर्वज्ञ भवान् वै भाग्यगौरवात्।
पुराणविद्यामखिलां व्यासात् प्रत्यक्षमीयिवान्॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥ (अ० १ श्लो० २२)
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः॥ (अ० १ श्लो० २३)
अष्टादशानां विद्यानामेतासां भिन्नवर्त्मनाम्।
आदिकर्त्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः॥ इति। (अ० १ श्लो० २४)

नन्वेवमपि न तावता निर्वाहः सर्वत्र सर्वेभ्यः प्रत्येकं परिपूर्णार्थाप्रतीतेः क्वचिद्विरोधाच्च समुदितस्यैव प्रामाण्यस्य युक्तत्वाच्चेत्यत आह। एतेषामिति। परिपूर्णपरस्परानुक्तस्थले तस्यावश्यकत्वादिति भावः। विकल्प इति।

तदुक्तं मनुना, (अ० २। श्लो० १४)

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः॥ इति॥ ४॥ ५॥

मि० इदानीं धर्मस्य कारकहेतूनाह।

या० देशे कालउपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥ ६॥

मि० 'देशो' यस्मिन्देशे मृगः कृष्ण इत्युक्तलक्षणः। 'कालः संक्रान्त्यादिः'। 'उपायः' शास्त्रोक्तेतिकर्तव्यताकलापः। 'द्रव्यं' प्रतिग्रहादिलब्धं गवादि। 'श्रद्धा' आस्तिक्यबुद्धिः, तदन्वितं यथा भवति तथा। 'पात्रं' 'न विद्यया' इत्येवमादिवक्ष्यमाणलक्षणम्। 'प्रदीयते' यथा न प्रत्यावर्तते तथा परस्वत्वापत्त्यवसानं त्यज्यते। एतद्धर्मस्योत्पादकम्। किमेतावदेव? नेत्याह। सकलमिति। अन्यदपि शास्त्रोक्तं जातिगुणयागहोमादि तत्सकलं धर्मस्य कारकं, जातिगुणद्रव्यक्रियाभावार्थात्मकं चतुर्विधं धर्मस्य कारकमित्युक्तं भवति। तच्च समस्तं व्यस्तं वा यथाशास्त्रं द्रष्टव्यम्। श्रद्धा सर्वत्रानुवर्ततएव॥ ६॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० ननु चतुर्दशानामुक्तं हेतुत्वं कारकतया ज्ञापकतया वा तत्राह । इदानीमिति । प्रमाणजिज्ञासायाः सिद्धिं विना ऽसम्भवेन प्रागत्रैव जिज्ञासोदयादिति भावः । पात्रे इति । उद्देश्यस्याधिकरणत्वविवक्षया सप्तमी । तस्य द्रव्यविशेषणत्वासम्भवेन क्रियाविशेषणत्वायाह । यथेति । प्रशब्दार्थमाह । यथेति । तथापरेति । परस्वत्वनिष्पत्तिपर्यन्तं यथा तथेत्यर्थः । लक्षणशब्दस्य न ज्ञापकपरत्वमित्याह । एतदिति । तदेतदित्यर्थः । सकलपदवैयर्थ्यं परिहरति । किमिति । अनतिप्रसङ्गायाह । शास्त्रोक्तमिति । कारणमिति । कारकमिति पाठान्तरम् । तत्र प्राधान्येनाह । जातीति । भावार्थः श्रद्धा । अपिना ऽङ्गभूतदेशादिपरिग्रहः । तस्या व्यापकत्वमाह । श्रद्धेति । इदमपि यथासम्भवं बोध्यम् । अन्यथा श्रद्धया देयमश्रद्धया देयं सर्वावस्थां गतोऽपि वेतिश्रुत्यादिविरोधः स्पष्ट एव ॥ ६ ॥

मि० इदानीं धर्मस्य ज्ञापकहेतूनाह ।

या० श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥

मि० 'श्रुतिः' वेदः । 'स्मृतिः' धर्मशास्त्रम् । तथा च मनुः,

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । इति ।

सदाचारः 'सतां' शिष्टानाम् 'आचारः' अनुष्ठानं नाशिष्टानाम् । 'स्वस्य चात्मनः प्रियं' वैकल्पिके विषये । यथा "गर्भाष्टमेऽष्टमे वाऽब्दे" इत्यादिष्वात्मेच्छैव नियामिका । सम्यक्संकल्पाज्जातः शास्त्राविरुद्धः कामः । यथा मया भोजनव्यतिरेकेणोदकं न पातव्यमिति । एते धर्मस्य 'मूलं' प्रमाणम् । एतेषां विरोधे पूर्वपूर्वं बलीयस्त्वम् ॥ ७ ॥

बा० इदानीमिति । तदुत्तरमुक्तहेतुत्वनिश्चयार्थमत्रैव जिज्ञासोदयादिति भावः । स्वपदं वृत्तपूरणार्थमिति केचित् । वस्तुतस्तु आत्मशब्दश्चेतनमात्रपर इति परात्मवारणाय तत् । यद्वा स्वपदस्य विवरणमात्मन इत्यर्थान्तरवारणायेति बोध्यम् । चः कामपदोत्तरं योज्यः । कर्मधारयनिरासायाह । सतामिति । बहुवचनेन कादाचित्कशिष्टकृतान्यथाऽऽचरणस्य तत्त्वाभावः सूचितः । शिष्टलक्षणं पृषोदरादिसूत्रे भाष्ये स्पष्टम् । स्वस्य चेति । इदं न सार्वत्रिकं किन्तु व्यवस्थितमित्याह । वैकल्पिक इति । सम्यगर्थमाह । शास्त्रेति । अत्रैव तात्पर्यं न तु शास्त्रसिद्धत्वे एव । तेन लौकिकस्यापि संग्रहस्तदाह । यथेति । जनकत्वनिरासाय सर्वानुरोधेनाह । प्रमाणमिति । यथाकथञ्चित् ज्ञापकं न पुनः प्रत्यक्षमेवेत्यर्थः । साक्षादिति शेषः ।

न चैवं साक्षात्कृतधर्माणः प्रत्यक्षधर्माण इति विरोध इति वाच्यम् । तस्य श्रुतिमात्रपरत्वात् । सैव हि धर्मे मुख्यं प्रमाणं स्मृत्यादयस्तु तद्भेदा इति भावः । अतएवाह । एतेषामिति ॥ ७ ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मि० देशादिकारकहेतूनामपवादमाह ।

या० इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥

मि० इज्यादीनां कर्मणाम् अयमेव परमो धर्मः यत् 'योगेन' बाह्यचित्तवृत्तिनिरोधेनात्मनो 'दर्शनं' याथातथ्यज्ञानम् । योगेनात्मज्ञाने देशादिनियमो नास्तीत्यर्थः । तदुक्तम् । "यत्रैकाग्रता तत्राविशेषात्" इति ॥ ८ ॥

वा० पूर्वं द्विविधहेतुजिज्ञासायां तेषां सर्वेषामुक्तिरत आह । देशेति । कर्मणामिति । अवधेः शेषत्वविवक्षायां षष्ठी । कर्मशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं सम्बन्धसूचनायाह । इज्यादीनां कर्मणामिति । तुरेवार्थ इत्याह । अयमेवेति । योगश्चित्तवृत्तिनिरोधः ( यो० पा० १ सू० २ ) इति पातञ्जलसूत्रस्य सामान्यत्वेऽत्र धर्मपदस्वारस्यादाह । बाह्येति । अतएव न मुख्यं दर्शनमित्याह । याथातथ्येति । अपवादत्वसङ्गतये आह । योगेनेति ।

अत्र पतञ्जलिसम्मतिमाह । तदुक्तमिति । यत्र पुरुषे एकाग्रता तत्र देशादिविशेषमनपेक्ष्य सिद्धिरित्यर्थः ॥ ८ ॥

मि० कारकहेषुतु ज्ञापकहेषुतु वा संदेहे निर्णयहेतुमाह ।

या०—चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वा ऽध्यात्मवित्तमः ॥ ९ ॥

मि० 'चत्वारो' ब्राह्मणाः वेदशास्त्रधर्मज्ञाः पर्षत् । तिस्रो विद्या अधीयतइति त्रिविद्याः, तेषां समूहस्त्रैविद्यम् । धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते । तद्वा पर्षत् । 'सा' पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः । अध्यात्मज्ञानेषु निपुणतमो वेदधर्मशास्त्रज्ञश्च एकोऽपि वा यं ब्रूते सोऽपि धर्मः ॥ ९ ॥

वा० उक्तरीत्या ऽन्यस्यानधिकारादाह । ब्राह्मेति । वेदसाहचर्याद्धर्मपदं शास्त्रपरमित्याह । धर्मशास्त्रेति । त्रयाणां तत्त्वपक्षमाह । तिस्र इति । प्रत्येकम् । अतएवाधीयते इत्युक्तिः । विद्याः ऋग्यजुःसामवेदरूपाः । एतेन तद्व्यावृत्तिरितिभ्रमनिरासायाह । धर्मेति । अन्यथा कथनासङ्गत्या ऽनुपयुक्तत्वं स्पष्टमेव । एवमग्रेऽपि बोध्यम् । तथा च त्रित्वव्यावर्त्यचतुर्थवेदव्यावर्तक एवकारः स्पष्टार्थः । अनन्तरस्यैव परामर्शभ्रमनिरासायाह । पूर्वोक्तेति । अध्यात्मेति । अध्यात्मविषयकज्ञानविषये अतिशयेन निपुण इत्यर्थः । अध्यात्मेति बहुव्रीहौ तु व्याख्याने तमवैयर्थ्यं स्पष्टमेव । ज्ञानिष्वित्येव ब्रूयात् । उक्तहेतोरेवाह । धर्मेति ।

कौर्मे तु एवमुक्तम् , ( अ० ३० )

अकृत्वा विहितं कर्म कृत्वा निन्दितमेव वा ।
दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥ ( श्लो० २ )

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० प्रायश्चित्तमकृत्वा तु न तिष्ठेत् ब्राह्मणः क्वचित् ।
यदाहुर्ब्राह्मणाः शान्ता विद्वांसस्तत् समाचरेत् ॥ (श्लो० ३)
वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान् द्विजः ।
स एव स्यात् परो धर्मो यमेकोऽपि व्यवस्यति ॥ (श्लो० ४)
अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः ।
यद् ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं धर्मसाधनम् ॥ (श्लो० ५)
अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः ।
वेदाध्ययनसम्पन्नाः सप्तैते परिकीर्त्तिताः ॥ (श्लो० ६)
मीमांसान्यायतत्त्वज्ञा वेदान्तकुशला द्विजाः ।
एकविंशतिसङ्ख्याताः प्रायश्चित्तं वदन्ति वै ॥ (श्लो० ७) इति ।

इत्युपोद्घातः ॥ ९ ॥

---

# अथ ब्रह्मचारिप्रकरणम् ।

मि० एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान्वक्तुं प्रथमं तावद्वर्णानाह ।

**या० ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ १० ॥**

मि० ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्षणाः । तेषामाद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः । द्विर्जायन्त इति द्विजाः । 'तेषां' द्विजानां 'वै' एव न शूद्रस्य । 'निषेकाद्याः' निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । 'श्मशानं' पितृवनं तत्संबन्धि कर्म अन्तो यासां ताः क्रियाः मन्त्रैर्भवन्ति ॥ १० ॥

बा० सङ्गतिमाह । एतैरिति । उपोद्घातमिति । उप समीपे उद्धृत्य हन्यते इत्युपोद्घातः उदाहारापरपर्यायः । उपोद्घात उदाहार इत्यमरोक्तेः ।

तदुक्तमभियुक्तैः,

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः । इति ।

प्रकृतनिर्वाहकसाधारणपरिभाषेति यावत् । एतदेव स्पष्टीकृतं सकलेत्यनेन । तावदिति । यावन्तो वर्णास्तान् सर्वान् वर्णानित्यर्थः । 'त्वाद्याः' आद्यास्तु । ब्रह्मशब्दार्थमाह । ब्राह्मणेति । तेषां मध्ये इति शेषः । द्विजपदं योगरूढमित्याह । द्विरिति । उपनयनतो द्वितीयं जन्मेति स्पष्टमन्यत्र । वैशब्दार्थमाह । एवेति । क्वचित् वै एवेत्येव पाठः । तद्व्यावर्त्यमाह । न शूद्रेति । अनेन तस्यामन्त्रकाः क्रिया इति दर्शितम् । अतएव



CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० यमः,

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।

इति। पितृवनमिति। मृतशरीरनिधानस्थानमित्यर्थः। तस्य तत्त्वासम्भवात् साहचर्याल्लक्ष्यार्थमाह। तदिति। पराचीष्टिरूपप्रेतसंस्कार इत्यर्थः। तृतीयान्तात्तसिरित्याह। मन्त्रैरिति। अत्रेदं बोध्यम्।

पुंसवने च सीमन्ते तथा चौलोपनायने।
गोदाने स्नानउद्वाहे नान्दीश्राद्धं पुरोदिने॥
अतोऽशुचौ सपिण्डाः स्युरेकगृहनिवासिनः।
सहस्वान्नाः समाचारा भवन्त्येकान्नभोजिनः॥
अन्त्ये दशाहपर्यन्तं भद्रे मातृविसर्जनात्।
नित्यानुषङ्गस्वधापिण्डशीताम्बुस्नानवर्जिताः॥
तएव गोत्रिणः प्रोक्ता हव्यकव्येषु गर्हिताः।

इति। ये सपिण्डाः पुरुषत्रयान्तर्वर्त्तिनः सन्तो मङ्गल्ये विवाहादौ पृथक्सद्मनिवासिनः सन्तः पृथक् पाकं कुर्वन्ति अथच स्वधाकर्मादि कुर्वन्ति तान् पितृपतिः सोमोऽहये सर्पेभ्यो ददाति। यद्वा उमया सह वर्त्तमानः सोमो रुद्रः संहारकर्त्ता स स्वस्याभरणभूतेभ्यः सर्पेभ्यो ददाति। यद्वा निर्ऋतेरुपस्थे यमस्य पुरतो दधाति। ददातीत्यर्थे ददातु दधातीत्यर्थे दधात्विति प्रयोगः। सोमो वीरं कर्मण्यं ददातीतिवत्। यदा सङ्कटादिना एकान्नभोजित्वमेकगृहनिवासित्वं तेषां न सम्भवति तदा कथमित्यत्राह

सङ्ग्रहे,

सर्वान् भोजयितुं कश्चिदसमर्थो भवेद्यदि।
सर्वैः स्वं स्वञ्च सम्पाद्य कार्यमेकान्नभोजनम्॥
सङ्कटात् सहवासस्य सम्भवो न भवेद्यदि।
स्वसद्मवासिनः सन्तः स्वधाकर्मादिवर्जनात्॥ १०॥

इति।

मि० इदानीं ताः क्रिया अनुक्रामति।

**या० गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा।**
**षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च॥ ११॥**
**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।**
**षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम्॥ १२॥**

मि० गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्, एवं वक्ष्यमाणान्यपि। तद्गर्भाधानम् 'ऋतौ' ऋतुकाले वक्ष्यमाणलक्षणे। पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम्। षष्ठेऽष्टमे वा मासि

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

मि० सीमन्तोन्नयनम् । एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये न प्रतिगर्भम् ।

यथाऽऽह देवलः,

सकृत् सुसंस्कृता नारी सर्वगर्भेषु संस्कृता । इति ।

'एते' आ इते आगते गर्भकोशात्कुमारे जाते जातकर्म । एकादशेऽहनि नामकरणं,तच्च पितामहमातामहादिसम्बद्धं कुलदेवतासम्बद्धं वा । यथाऽऽह शङ्खः, "कुलदेवतासम्बद्धं पिता नाम कुर्यात्" इति । चतुर्थे मासि निष्क्रमलक्षणं कर्म सूर्यावेक्षणं कर्म । षष्ठे मास्यन्नप्राशनं कर्म । चूडाकरणं तु यथाकुलम् । कार्यमिति प्रत्येकं सम्बध्यते ॥ ११ ॥ १२ ॥

बा० सङ्गतिमाह । इदानीमिति ।

एवमग्रे सर्वत्र बोध्यम् । अन्विति । अनुक्रमेण वक्तीत्यर्थः । अनुगतेति । अन्वर्थमित्यर्थः । एवमिति । एतद्वद् वक्ष्यमाणानि पुंसवनादीन्यप्यनुगतार्थानि कर्मनामधेयानीत्यर्थः । पद्ये वृत्तानुरोधेन वाक्ये उक्तेऽपि नामधेयता समस्तस्यैवेत्याह । पुंसेति । स्पन्दनादित्यस्य व्याख्या चलेति । नामैकदेश इति न्यायेनाह । सीमन्तोन्नेति । आद्यसंस्कारकाले गर्भाभावेन तत्रासन्देहेन गर्भकालिकसंस्कारत्वादनयोर्गर्भक्षेत्रसंस्कारतासन्देहनिरासायाह । एते चेति । "अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे" इति पारस्करेणोभयोः क्षेत्रसंस्कारताऽभिधानादिति भावः । सकृत्करणे मानमाह । यथाहेति । इदञ्च गर्भाधानादित्रितयपरमेव अन्यस्य असम्भवात् । ननु सीमन्तोन्नयनांशे युक्तमिदं यद्यपि,

अतएव हेमाद्रौ

हारीतोऽपि,

सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ इति ।

तत्रैव विष्णुरपि,

स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन ।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥

इति । गर्भार्थमेवाधानवत् स्त्रीसंस्कारत्वात् सकृदेव कृतः सीमन्तः सर्वानेव गर्भान् संस्करोति इति सुदर्शनाचार्योऽपि । तथापि पुंसवनांशे न युक्तम् ।

आवर्त्ततइदं कर्म प्रतिगर्भमिति स्थितिः ।

इति बह्वृचकारिकायामुक्तत्वात् । पुमांसं जनयतीति फलस्य सूत्रकारेणैव उपदिष्टत्वाच्चेति चेन्न । "एष वा अनृणो यः पुत्री" इत्यादिवचनैः सकृदपि पुत्रोत्पादनस्यावश्यकर्त्तव्यत्वात्तदङ्गं पुंसवनं प्रथमे गर्भे कर्त्तव्यमेव, तदनन्तरमुक्तसूत्राद्यत्र यत्र पुत्रेच्छा तत्र कार्यं नान्यत्र, यस्य तु कन्येच्छैव तस्य सकृदपि न इति तात्पर्यात् । सुदर्शनोऽपि इत्थम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० न चैवमपि,

सीमन्तोन्नयनं कर्म तत् स्त्रीसंस्कार इष्यते ।
केचित् गर्भस्य संस्कारात् गर्भे गर्भे प्रयुञ्जते ॥

इति विष्णुविरोध इति वाच्यम् । केचिदित्युक्त्यैव तस्यासिद्धान्तत्वसूचनात् । कृतेऽभ्युदय इत्येवम्परत्वाच्च ।

तथा च आश्वलायनस्मृतौ,

प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते ।

इति । बलिर्विष्णुबलिः । स च गर्भाष्टमे मासि कार्यः । इदञ्च "बह्वल्पं वा" इति वचनात् गृह्यसूत्रानुक्तेरिदानीं नाचरन्ति इति दिक् । तृतीयचतुर्थपञ्चमषष्ठेषु आद्यं सीमन्तेन सह वा । तत्र आपस्तम्बगृह्यं "पुंसवनं व्यक्ते गर्भे तिष्येण" इति । "सीमन्तोन्नयनं प्रथमे गभ चतुर्थे मासि" इति ।

कार्ष्णाजिनिरपि,

गर्भस्पन्दनमारभ्य यावन्न प्रसवस्तथा ।
सीमन्तोन्नयनं कुर्यात् शङ्खस्य वचनं यथा ॥

इति । तत्र व्यक्तिस्तृतीये चतुर्थे वा मासे, बह्वृचादिषु स्मृत्यन्तरेषु चोभयथा दर्शनात् । तत्र यदि चतुर्थे पुंसवनं तदा पूर्वं सीमन्तं कृत्वा पश्चात् पुंसवनं कार्यं, चोदितकालानतिक्रमणात् । मन्त्राम्नानसूत्रोपदेशयोः क्रमार्थत्वाच्च । साहित्यपक्षे नान्दीश्राद्धादि तन्त्रेणैव, देशकालकर्त्रैक्यात् ।

गणशः क्रियमाणानां मातृणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ (का० ख० ५ श्लो० १०)

इति छन्दोगपरिशिष्टाच्च । एतत् बहूनामपत्यानां युगपत्संस्कारकरणविषयमिति वोपदेवः । अतीतसंस्काराणां युगपत्करणे इति अन्ये । स्मृत्यर्थसारेऽप्युक्तम् इदम् । येन कर्मणा क्षिप्रमेव सूते न चिरकालं पीड्यते तादृशमपरमपि क्षिप्रं पुंसवनं तद्गृह्ये * उक्तम् । "अनाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य पत्तस्तूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाऽभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत्" इति । अधिकमन्यतोऽवगन्तव्यम् । अनवलोभनं त्वाश्वलायनानामावश्यकं न तैत्तिरीयाणाम् । †सप्तमाष्टमौ द्वितीयेऽधिकौ । यावत्प्रसवं तदुत्तरमपि द्वितीयमावश्यकम् । "यावद्वा न प्रसव" इति शङ्खात् ।

स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन ।
पुत्रं गृहीत्वा विधिवत् पुनः संस्कारमर्हति ॥

इति सत्यव्रताच्च । अनयोर्नियतकालत्वादस्तादिष्वपि करणे न दोषः । तद्रहितकाललाभे तु तत्र न कार्यमिति बोध्यम् ।

---

* आपस्तम्बगृह्ये । † सप्तमाष्टममासौ पुंसवनसीमन्तयोर्मध्ये द्वितीये सीमन्ते अधिकौ ज्ञातव्यौ । पुंसवनस्य तु तदानीं फलाभावान्नानुष्ठानम् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० अथ प्रसङ्गाद् गर्भिण्यास्तत्पतेश्च धर्मा उच्यन्ते ।

तत्र तावत् पारिजाते—

कश्यपः ,

गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
शोकं रक्तविमोक्षञ्च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् ॥
नदीप्रतरणञ्चैव शकटारोहणं तथा ।
उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् ॥
कृते पुंसवने चैतद् गर्भिणी परिवर्जयेत् । इति ।

मूलमपि ,

दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वा ऽपि तस्मात्कार्यं प्रियं स्त्रियाः ॥ इति ।

दौर्हृदं गर्भिणीप्रियमित्यर्थः ।

मासात्तु पञ्चमादूर्ध्वं निन्दिता बहुदोषकृत् ।
गुर्विणी पञ्चमादूर्ध्वं दैवे पित्र्ये च कर्मणि ॥
पित्रर्थं पञ्चयज्ञार्थं पाकं कर्त्तुं न सा ऽर्हति । इति ।

संवर्त्तः ,

सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ।
न स्नातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥
नोपस्करेषूपविशेन्मुसलोलूखलादिषु ।
जलं न चावगाहेत शून्यागारञ्च वर्जयेत् ॥
वल्मीकायां न तिष्ठेत न चोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥
न शयालुः समातिष्ठेद् व्यायामञ्च विवर्जयेत् ।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्जयेत् कलहं लोके गात्रभङ्गं तथैव च ।
न मुक्तकेशी तिष्ठेत नाशुचिः स्यात् कदाचन ॥
न शयीतोत्तरशिरा न चापरशिराः क्वचित् ।
न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ॥
नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत् ।
कुर्यात्तु गुरुशुश्रूषां नित्यं मङ्गलतत्परा ॥

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

ब्रा० सर्वौषधीभिः काष्ठेन वारिस्नानं समाचरेत् ।
कृतरक्षा ऽनसूया च वास्तुपूजनतत्परा ॥
तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ।
दानशीला तृतीयायां पार्वत्यां नक्तमाचरेत् ॥
शान्तवृत्ता भवेन्नारी विशेषेण च गर्भिणी ।
यस्तु तस्या भवेत् पुत्रः शीलायुर्वृद्धिसंयुतः ॥
अन्यथा गर्भपतनमवाप्नोति न संशयः ।
तस्मात्त्वमनया वृत्त्या गर्भेऽस्मिन्यत्नमाचर ॥

गालवोऽपि,

दहनं वपनञ्चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणञ्चैव वर्जयेत् गुर्विणीपतिः ॥ इति ।

संग्रहेऽपि,

प्रेतवाहोदधिस्नानं वपनं पिण्डपातनम् ।
विदेशगमनञ्चैव न कुर्यात् गुर्विणीपतिः ॥ इति ।

आश्वलायनोऽपि,

वपनं मैथुनं तीर्थं वर्जयेत् गुर्विणीपतिः ।
श्राद्धञ्च सप्तमान्मासादूर्ध्वञ्चान्यत्तु वेदवित् ॥ इति ।

श्राद्धं तद्भोजनमित्यर्थः ।

केशान्मासत्रयादूर्ध्वं धारयेत् गर्भवान् द्विजः ।
यज्वनः पर्वणोः क्षौरं धारणं त्वाहिताद्दते ॥

इति अन्यत्र ।

विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् ।
अन्तर्वत्न्याञ्च जायायां नेष्यते केशवापनम् ॥

इति अन्यत्र ।

ज्योतिःशास्त्रेऽपि,

अव्यक्तगर्भापतिरब्धियानं
मृतस्य वाहं क्षुरकर्म सङ्गम् ।
तस्या नु यत्नेन गयादितीर्थं
यागादिकं वास्तुविधिं न कुर्यात् ॥ इति ।

जातकर्मेति ।

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।

इति पारिजाते ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० वसिष्ठः,

प्राङ् नाभिवर्धनात् पुंसो जातकर्म विधीयते। इति।

संवर्त्तः,

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।

दैवाददीतकालं चेदतीते सूतके भवेत्॥ इति।

विष्णुधर्मेऽपि,

अच्छिन्ननाभि कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।

तच्च हेम्नैव कार्यम्।

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्।

न पक्वेन न चामेन कल्याणान्यभिकाङ्क्षयन्॥

इति संवर्त्तात्। एतच्च मृताशौचमध्येऽपि कार्यं। तदाह हेमाद्रौ

प्रजापतिः,

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति॥ इति।

उक्तकालातिक्रमे कालान्तरमाह

बृहस्पतिः,

मुख्यालाभे विधिज्ञेन विधिश्चिन्त्यः प्रमाणतः।

नक्षत्रतिथिलग्नानां विचार्यैवं पुनः पुनः॥

इति। इदञ्च रात्रौ सन्ध्यायां ग्रहणे जाताशौचान्तरमध्येऽपि कार्यम्। मृताशौचेऽपि तदैव आशौचान्ते वा।

तदुक्तं विष्णुधर्मोत्तरे,

अशौचोपरमे कार्यमथवा नियतात्मभिः। इति।

पितरि देशान्तरस्थे पितृव्यादिर्गोत्रजो ज्येष्ठक्रमेण कुर्यात्। एवं नामकर्म्मण्यपि। परन्तु तस्य नियतकालत्वेऽपि विष्टिवैधृतिव्यतीपातग्रहणसंक्रान्तिश्राद्धदिनेषु निषेधः। अस्तादिनिषेधस्तु न, नियतकालत्वात्। तदतिक्रमे तु सोऽप्यस्तीत्यन्यत्र विस्तरः।

अर्घ्यान्ता मानसी सन्ध्या प्राणायामविवर्जिता।

गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्॥ इति।

## अथ प्रसङ्गात् दत्तपुत्रपरिग्रहविधिः।

तथाऽऽह

बौधायनः,

पुत्रपरिग्रहविधिं व्याख्यास्यामः। शोणितशुक्रसम्भवो मातापितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि सन्तानाय पूर्वेषाम्। न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुः। प्रतिग्रहीष्यन्नुपकल्पयते

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

बा० द्वे वाससी द्वे कुण्डले अङ्गुलीयकञ्चाचार्यञ्च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममिति। अथ बन्धूनाहूय मध्ये राजनि चावेद्य परिषदि चागारमध्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत । ददामीतीतर आह । तं परिगृह्णाति धर्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामीति। अथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाञ्जुहोति यस्त्वा हृदा कीरिणा मन्यमान इति पुरोऽनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानाद्दक्षिणां ददात्येते एव वाससी एते एव कुण्डले एतच्चाङ्गुलीयकं यद्येवं कृत्वौरसः पुत्र उत्पद्यते तुरीयभागेष भवतीति ह स्माह बौधायनः ।

# अथ प्रसङ्गात् षष्ठीपूजनम् ।

तत्र नारदः,

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्य्यं जन्मदानां तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्य्युर्दशम्यां चैव सूतके ॥ इति ।

# अथ प्रयोगः ।

अद्येत्यादि ममास्याः सूतिकाया अभिनवजातकुमारस्य च नैरुज्यदीर्घायुष्यलाभसर्वोपद्रवशान्तिपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं सर्वाभ्युदयप्राप्तिकामो गणपतिदुर्गेष्टदेवताकुलदेवताग्रामदेवतागौर्यादिषोडशमातृषट्कृत्तिकाकार्त्तिकेयायुधविष्णुमहाषष्ठ्यादीनां यथामिलितोपचारैः पूजनमहं करिष्ये। तदङ्गत्वेनादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये इति सङ्कल्प्य। प्रथमं पाद्यार्घ्याचमनीयादिना गणपतिं पूजयेत् । ततस्तत्प्रार्थना ।

ॐ सर्वविघ्नहरो देव एकदन्त गजानन ।
भक्त्या संपूजितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥
लम्बोदर महाभाग सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥
इति गणपतिं प्रार्थ्य सर्षपान् विकिरेत् ।
अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥

ततो महीद्यौरित्यादिपूर्णपात्रनिधानान्ते पूर्णपात्रोपरि वरुणं संपूज्य तत्राग्न्युत्तारितां प्रतिमां स्थापयेत् । ततोऽक्षतपुञ्जेषु पूगीफलेषु वा गणपतिदुर्गाद्यावाहनं कृत्वा पूजयेत्। तत्रादौ गणपतिपूजा । ततो जयन्तीमन्त्रेण दुर्गां पूजयेत् ।

CC.0- Jangamwadi Math Collection. Digitized by eGangotri

